समदिवसनिशीथं सङ्गिनस्तत्र शंभोः
शतमगमदृतूनां साधमेका निशेव ।
न स सुरतसुखेभ्यश्छिन्नतृष्णो बभूव
ज्वलन इव समुद्रान्तर्गतस्तज्जलौघैः ॥ ९१ ॥

**समेति** ॥ निशीथोऽत्र निशामात्रलक्षकः । समदिवसनिशीथं तुल्याहर्निशं यथा तथा तत्र तस्यां पार्वत्यां सङ्गिन आसक्तस्य । रात्रिंदिवं रममाणस्येत्यर्थः । शंभोः शिवस्य सार्धमर्धेन सहितमृतूनां शतं पञ्चाशदुत्तरं मानुषमानेन पञ्चविंशतिवर्षाण्यगमन् । स शंभुः समुद्रान्तर्गतः समुद्रस्यान्तर्वृत्तिर्ज्वलनो वडवाग्निरिव तज्जलौघैस्तस्य समुद्रस्य प्रवाहैरिव सुरतसुखेभ्यश्छिन्नतृष्णो निवृत्ताभिलाषो न बभूव । किंतु चिरमवर्धतेत्यर्थः ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनी-
समाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे
महाकाव्य उमासुरतवर्णनं नामाष्टमः सर्गः ।

---